वाणीं भजत

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु, (आ० प्र०) भारतम्

संपुटः ४ | 15 OCTOBER 1966 | क्रमांकः १०

आश्वयुजांकः] शकवर्षः १८८८ [मूल्यम् ४० पैसाः

# विषयसूचिका



——:o:——

# सेवां ते करवाणि, वाणि!

कर्णाटांध्रीधनमिलिते
　　केरलद्रविड़निगूढयुते ।
हिन्दीमराठाद्यतिमहिते
　　संस्कृतनाम्ना प्रचलिते, ललिते ॥ ॥ सेवां ॥

वाचा त्वामभिनन्दामि
　　मत्या दृढ़मभिनिविशामि ।
कृत्या त्वां परिसेवेऽहम्
　　भक्त्या भवतीं कालयेयम् ॥ ॥ सेवां ॥

त्वत्काव्यानि पठेयम्
　　त्वत्पद्यानि लिखेयम् ।
त्वच्छास्त्राणि विगाहेऽहं
　　त्वन्मृदुपदानि परिसेवे ॥ ॥ सेवां ॥

क्रियाबहुले सार्थकपदविपुले
　　महाबले बहुरहस्ययुतिशबले ।
जगत्पावनि भाषामूलकारणे
　　भारतवाणि ज्ञाननिश्रेणि ॥ ॥ सेवां ॥

## स्वदेशवस्तूद्यमस्य आवश्यकता

पुरा आंग्लोच्चाटनाय स्वदेशवस्तूद्यमः आवश्यक आसीत्। स चोद्यमः सफलः देशीयानां प्रीतिं शत्रूणां भीतिं च आवहत। स एव उद्यमः अधुनापि आवश्यकः वर्तते। अधुना तु स भिन्नफलापेक्षी। विदेशद्रव्यसंकटे पतितानां अस्माकं समुद्धरणाय च स उपयुज्यते।

अधुना स्वराज्यप्राप्त्यनन्तरं धनिषु अधनिषु च भोगलालसा अत्यधिका वर्तते। न तावन्मात्रमेव अलसतापि अतिशेते। सर्वे स्वतन्त्राः सर्वे राजान इति प्रबोधनस्य माहात्म्यात् सकला अपि जनाः अनायासेनैव सुखपराकाष्ठां अनुभवितुमीहन्ते। अतः सर्वत्र वस्तुलोपः दारिद्र्यं च विलयताण्डवं करोति। अखिलो जनः अभुक्त्वैव वेषातिशये प्रीतिमावहति। दग्धोदर एव मुग्धः छायाचित्रं अनुधावति। ध्वनिग्राहिणीं क्रीत्वा स्कन्धे लम्बयति। मणिबन्धिकया मणिबन्धं अलंकरोति। एवं आत्मानं धन्यं मन्यः नागरिकताभावनया वृथा पर्यटति। नात्मकर्तव्यमनुशीलयति, नात्मस्थितिं समालोचयति, नात्मकुटुम्बं अनुचिन्तयति। एवं बहूनां समाचारेण कार्यालयेषु अव्यवस्था, ग्रामेषु च दुरवस्थाः, नगरेष्वपि विपरीतकष्टानि प्रभवन्ति।

एतादृशापमार्गदूरीकरणाय स्वदेशाभिमानितां प्रजाहृदयेषु पुनः प्रज्वालयेत् येन प्रमादालास्यभोगपरायणतादिदुर्गुणान् विधूय प्रजाः स्वदेशसेवायां निमज्जेयुः। गांधीप्रबोधिताः खलु पूर्वभारतीयाः ऐश्वर्यवन्तोऽपि दुर्भराणि धनानि वस्त्राणि अधरन् अधुनापि धरन्ति।

यद्यपि अद्यास्मद्देशे अनेकानि वस्तूनि उत्पाद्यन्ते तथापि तेषां विदेशोत्तरण एवोपयोगः वरम्। न स्वोपयोगः। स्वोपयोगे च वैदेशिकद्रव्याभावात् अलभ्यानां आवश्यकानां यन्त्रादीनां अवतरणं दुष्करं भवति। ऋणभारश्च शिरःपतितः भ्रामयति देशम्।

अतोदेशीयाः स्वसुखं व महाल भममत्वा विलासवस्तूपयोगं ह्रासयेयुः। तेन भारतीयवस्तुप्रवाहः खण्डान्तराणि प्र रेत । अस्मद्दारिद्र्यं च दूरीभवेत्।

वयं च भारतीयाः निराडम्बर जीविनः प्रख्याताः प्रपञ्चे । अधुना पाश्चात्यसंपर्कात तदनुकरणौत्सुक्यात् व्यार्थीन् अनावश्यकानभ्यासान् शीलयामो वयं येनोभयविभ्रष्टाः तैलपायिका इव परिहासपात्रा अभवाम ।

भारतीय आहारः सदा सात्विको भवति । अन्नरोटिकाक्षीराज्यदधिदुग्ध-मिश्रितः निर्मांसः समांसो वा सः । मांसेपि विधिनिषेधौ जागृतः कालदेशपात्रानु-गुणतया । आहारस्यापि सात्विकस्य असात्विकस्य वा कालनियमः मात्रानियमोपि वर्तते । अधुना तु अनियमेन आहारसेवनात न केवलमाहारलोपः प्रजानां, अपितु रोगबाधाश्च बहवः समुपजायन्ते । तन्निवारणार्थे महतीं धनराशिः व्ययीक्रियते । औषधानां कृते उपयुज्यमानं धनं अत्यधिकमात्रया भवति । देशीयौषधेषु विपुलेषु प्रसिद्धेषु वैदेशिकौषधार्थं एतावान् धनव्यय शोचनीयः । आंग्लराजनीतौ स्वीयवैद्य प्रचारणमपि एकः मुख्योऽध्यायः । आयुर्वेदादिवैद्यविद्यां अधःकृत्य आंग्लचिकित्सा समुन्नमिता । तद्विद्यानामेव प्रोत्साहः प्रकाशितः, तच्चिकित्साया एव सौविध्यमर्पितं तदौषधानामेव सौलभ्यमापादितम् । तेन च गड्डुरिकाप्रवाहपतितोयं लोकः आत्म-वञ्चनामनुमेने । स्वातन्त्र्यप्राप्त्यनन्तरमपि भारतीयाः नेतारः नानुशोचन् स्ववैद्य-कलां प्रति । न ते प्रायतन् तदुद्धरणाय येन भारतीयधनराशिः पाश्चात्यैः नापह्रियेत ।

केचिद्वदन्ति आरोग्यविषये देशीयताभिमानप्रदर्शनं मूढं कर्मेति तदर्धसत्यं अत्र विषये । न हि सर्वथा विदेशीयवस्तुनिरोधः वैद्यविषये आकांक्ष्यते अस्माभिः । देशीयवैद्योद्धारद्वारा आयुर्वेदयूनानसिद्धौषधानामुपयोगेन, तत्परिशोधनेन, तदभि-वर्धनेन च देशीयविद्याया विस्तृतोपयोगस्साध्य इति, असाध्यविषयेषु विदेशीय-मौषधमपि उपयुञ्जीतेति । शस्त्रचिकित्सादिषु तु तेषां विधानानि अस्मयत्ती-क्रियन्ताम् । तेषां भारतीयता आपाद्यताम् । भारतदेशेपि बहून्यौषधानि निर्मीयन्ते सूच्यौषधानि च सृज्यन्ते । अथापि वैद्यानां विद्याभ्यासलेपात ते पाश्चात्यान्येव वस्तूनि बहुलं उपयुञ्जते सूचयन्ति च । भारतीयवैद्यकलाशालानिष्णाताश्च वैद्या व्यामोहात वैदेशिकौषधोपयोगमेव धनार्जकं मन्वानाः तेन चिकित्सन्ते ।

अतः सर्वकारेण प्रथमतः उभयवैद्यज्ञपरिषदं समावेश्य यावच्छक्यं देशीयौषधोपयोगं निर्णीय तदनुसारं वैद्यकल्पशालासु पाठ्यप्रणाल्यां तस्य अवश्यक-पाठ्यत्वेन निवेशनीयम्। सर्वकारः वैद्यालयेषु तानि च औषधानि समर्पयेत्। तदुत्पादनाय च औषधनिर्माणशालाः निर्वहेत। एवं च निरुद्योगसमस्यायाः शैथिल्यं, देशीयवस्तूनां देशे उपयोगः, व्ययस्य ह्रासः, वैदेशिकद्रव्यबाधानिरोधः; प्रजानामारोग्यवृद्धिश्च भवति।

अस्मन्मते खद्दरप्रकरणं परिसमापयितव्यम्। तत्प्रयोजनमवसिततरम्। अतः तदुपयोगसंरक्षिता निधयः आयुर्वेदादिसमुद्धरणाय परिवर्तयितव्याः। प्रथमतः प्रतिचिकित्सालयं एकैको देशीयवैद्यः आयोज्यः चतस्रश्च शय्या आस्तरणीयाः। वत्सरक्रमेण च ते ताश्च वर्धयितव्याः। तेन च उभयवैद्ययोः ज्ञानविनिमयश्च सुष्ठु संपत्स्येत॥

जयत्वायुर्वेदः!

लघुकथा ३

# प्रतिभूतभूतकथा

## महाकविः पैत्तंबाडि व० रामानुजाचार्यः

कस्मिंश्चित ग्रामे एकः कृषीवलः आसीत। स कदाचित् स्वक्षेत्रस्थं कृषिकरणबाधकं त्रिपूरुषवयस्कं एकं वृक्षं स्वगृहबन्धनार्थं केदारे कृषिकरणार्थं च छेत्तुं आरेमे। तावत तद्वृक्षवासी कश्चित भूतः आगत्य सप्रणाममवादीत।

भूतः – मदावासमिमं वृक्षं मा छिन्द्याः। एतत्क्षेत्रे तव कियान् व्रीहिलाभो भवेत् ?

कृषीवलः – षट्त्रिंशत्प्रस्थपरिमितभाराणां षष्टिः।

भूतः – तावत्प्रतिवर्षं तव गृहे अहं दास्यामि।

कृषीवलः वृक्षं अत्यजत। भूतः तथैव प्रतिवर्षं अदिशत। एकदा दूरदेशग्रामस्थः कश्चित तद्भूतबन्धुः अन्यः भूतः तत्र आगच्छत। तदा तद्वर्षे अनावृष्ट्या कुत्रप्यलब्धव्रीहिभारः पूर्वभूतः किञ्चिन्म्लानाननस्तस्थौ।

बन्धुभूतः – किं? म्लानाननोऽसि।

भूतः स्ववृत्तान्तमकथयत। बन्धुभूतः साग्रहं अहं तं कृषीवलं हन्मि इति तद्गृहं जगाम। तदा कृषीवलः तप्तायोदण्डमादाय स्वपुत्रं वीक्ष्य एवमवदत– बहिर्ग्रामात वृषभमानय। तप्तं करोमि।

बन्धुभूतः तत्छ्रुत्वा आत्मानमेव अन्योक्त्या वदतीति मन्वानः पुरतो गत्वा मा तप्तं कुरु माम्। त्वत्केदारस्थभूतार्थं अहं तावत्परिमिततण्डुलभारं ददामि इति प्राणरक्षणं ययाचे। कृषीवलस्तथेत्यवदत। तथैव प्रतिवर्षं तण्डुलं अगृह्णात। स भूतः तण्डुलदाने नितान्तं खेदमाप।

बन्धुस्नेहेन योऽन्यार्थं भवति प्रतिभूस्स्वयम्।
स सीदति यथाभूतो व्रीह्यर्थतण्डुलप्रदः॥

## गुरुशिष्ययोः

# प्रश्नोत्तरी

| | |
|---|---|
| यमः कः ? | सत्यक्षमा च यमः । |
| शमः कः ? | शमः खलु शान्तिः । |
| दमः कः ? | इन्द्रियसंयमो दमः । |
| तितिक्षा का ? | तितिक्षा दुःखमर्षणम् । |
| का धृतिः ? | जिह्वोपस्थजयो धृतिः । |
| किं नाम परमदानम् ? | अभयदानं नाम परमदानम् । |
| किं नाम तपः स्मृतम् ? | कामत्यागः तपः स्मृतम् । |
| किं नाम शौर्यम् ? | स्वभावविजयो नाम शौर्यम् । |
| सत्यं नाम किम् ? | सर्वत्र परमात्मदर्शनं सत्यम् । |
| ऋतं नाम किम् ? | ऋतं च सूनृता वाणी । |
| किं नाम शौचम् ? | कर्मसु अनासक्तिः शौचम् । |
| कः सन्यासः ? | कामनानां त्यागः सन्यासः । |
| किं नामाऽभीष्टं धनम् ? | धर्मः खलु अभीष्टं धनम् । |
| को नाम यज्ञः ? | परमेश्वरार्चनं नाम यज्ञः । |
| का नाम दक्षिणा ? | दक्षिणा ज्ञानसन्देशः । |
| किं नाम परमं बलम् ? | प्राणायामः परमं बलम् । |
| कः उत्तमो लाभः ? | भगवतो भक्तिरेव उत्तमो लाभः । |
| का नाम विद्या ? | ययाऽऽत्मपरमात्मनोः भेदः नश्येत् । |
| का नाम लज्जा ? | अकर्मसु जुगुप्सा नाम लज्जा ? |

| | |
|---|---|
| का नाम सौन्दर्यम् ? | निरपेक्षितादयो गुणाः सौन्दर्यम् । |
| किं नाम सुखम् ? | सुखदुःखत्ययो नाम सुखम् । |
| दुःखं नाम किम् ? | दुःखं कामसुखापेक्षा । |
| कः पण्डितः ? | यः बन्धमोक्षयोः तत्त्वं जानाति । |
| कः खलु मूर्खः ? | देहगेहादिषु अहंकारवान् मूर्खः । |
| कः खलु सपन्थाः ? | सपन्थाः खलु भक्तिमार्गः । |
| उत्पथः कः ? | उत्पथः खलु भगवतो बहिर्मुखत्वम् । |
| को नाम स्वर्गः ? | सत्वगुणोदयो नाम स्वर्गः । |
| को नाम नरकः ? | नरकः तमोगुणोदयः । |
| को नाम समर्थो बन्धुः ? | गुरुः खलु बन्धुरीश्वरः । |
| कः खलु धनाढ्यः ? | गुणाढ्यः खलु धनाढ्यः । |
| को नाम दरिद्रः ? | असन्तुष्टः खलु दरिद्रः । |
| कः खलु कृपणः ? | अजितेन्द्रियः खलु कृपणः । |
| कः समर्थो नरः ? | गुणेषु असक्तधीः नरः समर्थः । |
| कश्चाऽसमर्थः ? | गुणेषु प्रसक्तधीः असमर्थः । |

अनुरक्तस्य शिष्यस्य कृपालोर्विदुषो गुरोः ।
प्रश्नोत्तराणि योऽधीते स ज्ञानं लभते नरः ॥

# दैवसेवा माहात्म्यम

के. शिवरामरेड्डि, प्रोद्दटूरु.

पुरा कदाचित् श्रीकृष्णे मुरलीगानं करोति सति तद्गानमाधुर्येण धेनुः काचन परमशा सती क्षीरं ऊधात् स्रावयामास। स्रुतात्तस्मात् दुग्धबिन्दुरेकः उत्प्लुत्य श्रीकृष्णस्य शिरस्यपतत्। एतस्माद्धेतोः तद्धेन्वा क्षीराभिषेकसुकृतं प्राप्तं आसीत्। कालान्तरे वयःपरिणामात् धेनुः अम्रियत। सा पुनर्जन्मनि सुशीलाभिधाना कस्यचित् भागवतस्य विप्रस्य दुहितृत्वेन अजनि। युक्ते वयसि सा पित्राज्ञया क्रौर्यलोभयुतं कञ्चनविप्रं पर्यणैषीत। विवाहादारभ्य भर्तृकृतबहुबाधा अपि सहन्ती महापतिव्रतेति प्रख्यातिं सा लेभे।

एकदा ग्रामान्तरं भर्तरि गते सति पांडुरंगस्वामी कपटवटुवेषं धृत्वा अतिथिः सन् गृहमाजगाम। सुशीलया पाकविलम्बं सोढुं प्रार्थितोऽपि स वटुः अहं बहुदिनेभ्यः आहाराभावात् क्षुद्बाधापीडितः। तावत्पर्यन्तं जीवितं न शक्नोमि धारयितुं इत्युक्त्वा पर्युषितं प्रातराशं अयाचत। सा अतिथये पर्युषितदाने शङ्कितमनाः अपि तदाज्ञया तत्प्राणरक्षणार्थं अर्पयाम्बभूव। तेन अतृप्तः स पुनरयाचत। तदा सा भर्तृनिगूहितानि सर्वाणि भक्ष्याणि तस्मै ददौ। तानि सर्वाणि भुक्त्वा सः रेचितां क्षुधमभिनीय आहारं पुनरयाचत। तदा सुशीला प्राप्ताश्चर्या अतिथिरयं भगवानेव इति मत्वा आहारसिद्ध्यर्थं सत्वरं अग्निदेवमेव प्रार्थयामास। तत्प्रभावात् नानाविधानि पंचभक्ष्यपरमान्नानि प्रादुरभवन् क्षणेन। तदा भगवान् तद्भुक्त्वा सन्तुष्टः प्रदर्शितवेषः तत्पूर्वजन्मवृत्तान्तं कथयित्वा परीक्षार्थमेवमागतोस्मि इत्यब्रोचत। ततः च "त्वद्भर्तृकाठिन्यप्रदर्शनस्य अहमेव कारणभूतः। पुरा त्वद्भर्ता अकृतसत्क्रियः पापात्मा सन् अनालोचितं एकदा उत्सवकाले मन्निवेदितं अन्नं अपश्यत। तत्सुकृतलेशेन उत्तमद्विजवंशे उत्पन्नः अधीतसर्वशास्त्रः त्वां पर्यणैषीत। त्वत्परीक्षार्थं एतावत्पर्यन्तं तं लोभिनं कठिनहृदयविशिष्टं च अकरवम्। अद्यप्रभृति सः उत्तमगुणैः विराजितो भवेत्। युवयोः पंचपुत्रसन्ततिः भवेत्। शतवर्षमुषित्वा भर्त्रा सह मोक्षमधिगमिष्यसि" इत्युक्त्वा अन्तर्हितो अभूत्। ततः सुशीलापतिः उत्तमरीत्या अवर्तत॥

# राजाजीकथा २९

## मदिरा जयन्ती

लेखकः – आ० वरदराजन्

कदाचित् दिग्दिगन्तेभ्यः समागता महर्षयः क्वचित् समाविश्य समालोच्य कश्चिद् वृक्षविशेषं सृष्टवन्तः। स्वीयं ज्ञानविज्ञानादिकं अनुभवजातं समस्तं स्वैः सह नान्तं गच्छेत्, स्वसमनन्तरं भाविन्याः सन्ततेः तत्परम्परायाश्च सन्ततं अनुवर्तमानं सत् दिशाप्रदर्शनं कुर्यादिति सद्बुद्ध्या केवलं तं वृक्षविशेषं असृजन् महर्षयः। अस्य वृक्षस्य पत्रेष्वेव मन्त्र-तन्त्रादिकं, धर्मशास्त्राणि, पुराणेतिहास-प्रवचनानि, आचार-व्यवहार-संप्रदायविशेषार्थाः अतीव चातुर्येण लिखितास्तैः। वेदाः उपनिषदः स्मृतयः एवमादयोऽपूर्वा ग्रन्थाः शाश्वतीं स्थितिं प्राप्य शरदांशतं विलसेयुरिति तत्पत्रेषु अयश्शलाकया विलिख्य संरक्षितास्तैः।

★ ★ ★

गच्छति काले क्रमेण पंडितंमन्याः केचन प्रादुर्बभूवुः। अनयैव अहंभाव-नया ते परस्परं वादविवादैरधिक्षेप्तुमपि प्रवृत्ताः।

“त्वं शुण्ठः, अहं प्राज्ञः” इत्यस्य हि प्रतिध्वनिः तथैव भवति “त्वं शुण्ठः” “अहं प्राज्ञः” इति।

एतादृश्या त्वं त्वं अहमहमिकया (तु तू - मैं मैं करणेन) विवदमानाः पण्डिताः बंभ्रम्यमाणा आसन्।

★ ★ ★

इदं समस्तं रासभं कोलाहलं पश्यन्त्या वाग्देव्याः महान् कोपः संजातः। सा सम्यगालोचितवती। ततश्च स वाणी लक्ष्म्या साकं संमन्त्र्य पंडितेभ्यः लेखनपत्राणि ददतो वृक्षान् मदोन्मादकारकान् मैरेयप्रदान् महीरुहान् भावयामास।

तालपत्रग्रन्थानां पठने यावत् बुद्धिवैशद्यं तावदेव ततोऽप्यतिशयितं वा बुद्धिजाड्यं तन्मदिरापानेन संभवति। जनाः तेभ्यो वृक्षेभ्यः मदिरासंग्रहणे निमग्नाः। लक्ष्मीकटाक्षविशेषेण मदिराविक्रयिणां धनमधिकं लभ्यमानमासीत्। अतस्ते इतोऽप्यधिकं तत्कार्ये संलग्नाः। अन्ततो गत्वा नारिकेलवृक्षानपि अस्मिन् व्यापारकर्मणि उपयोजयामासुः।

★ ★ ★

"अय्यय्यो! मदीयं हृदयं विभेद्य जीवरसं निस्स्रावयन्ति खल्वेते खलाः" इति तालवृक्षाः सखेदव्यथं रुदन्ति स्म। तस्मिन् रोदने स्रवतां अश्रूणां धारा गर्भ-निर्भेदनेन द्रवता जीवरसेन सह मिलित्वा घटान् पूरयति। पात्रप्रियाणां मदिरा-भूत्वा तान् मादयति, ज्ञान-विज्ञानशून्यान् करोति। मदिरामदमत्तान् दृष्ट्वा "न परितपन्तीत्येव" प्रत्युत केचिन्महाजनाः ततोप्यधिकां मदिरां निस्स्राव्य आनाय्य विक्रीणन्ति, विशेषतो धनिनश्च भवन्ति।

★ ★ ★

तालपत्राणि ऋषिप्रवरं न् दध्युः। "विज्ञानव्याप्त्यर्थं जन्म प्राप्तं, परंतु अस्मदीया शक्तिः मदमोह दिकं वितानयति, अस्मल्ललाटलिखिता रेखा एवं किल अन्ते संवृत्ता" इति तालपत्राणि स्वकीयं खेदं वायुलीनं उद्घुष्य अस्थिरा इतस्ततः चलन्ति विचलन्ति च।

पापभूयिष्ठात् अस्मात् भूतलात् निवृत्य जीवितुं कियदुच्चैर्गगनम्! तथा च वायुमण्डले, अत्यन्त-समुन्नत-स्थाने अपत्य-संरक्षणं कुर्वन्त्या अपि मेऽपत्यानि, कथञ्चिदुपयोगतानां घातुकानां हस्तयोः पतन्ति। ते निर्दयं मदपत्यानां हा! कण्ठान् विच्छिद्याऽधः पातयन्ति इति बहुवात्सल्या तालमाता आक्रोशति स्म।

आरोढुं अनुकूलाः शाखाः प्रशाखा वा न प्ररोहयामि । शताधिकपदोन्नतिं प्राप्यापि अहं एतेभ्यो धातुकेभ्यः नोऽनमुक्ताऽस्मि । यत्किंचित् तन्त्र पादबन्धं कटिबन्धं च विधाय ह्येते मदुपर्यागच्छन्ति मर्कटा इव । केयं मे शापोपहतिः ? कुतस्संप्राप्ता ? इति तालं नायाः रुदितं वायुमण्डले विलीनम् ।

कियन्तं वा कालं तपस्तप्त्वा विज्ञानमुपार्जितम् ! परन्तु तत् विज्ञानधनं वृथैव हातुं पुनः पुनः प्रवर्तन्ते प्रयतन्ते च किमिति ? इति व्यथितहृदया भवन्ति विज्ञानस्थापनार्थं अवतीर्णाः तालवृक्षाः ।

रुदित्वा साधितं वा किम् ? मद्यपाननिषेधः प्रभुत्वेन यद्यपि कृतः, शासनमपि कृतमस्ति । अथाऽपि चौर्येण कथंचित् मदिरां संपादयन्ति पिबन्ति, पाययन्ति च ।

अन्तरिक्षं गता ऋषिगणाः इदं सर्वं अवलोकयन्तो व्यथन्ते ।
"अयं वाग्देवी-निग्रहजनितोऽभिशापः" इत्याह कश्चिदृषिः ।

विद्यावन्त नाऽहंकुर्युः, विद्यामदोऽपि मदिरामदनिर्विशेष एव इत्याह सुस्मिता लक्ष्मीः सस्मितम् । मदर्थं नारिकेलफलानि उपाहरन्ति; परन्तु स्वकीयमहंकारं किमिति नोपसंहरन्ति ? निरहंभावमाश्रित्य अन्तःपरिपक्वं ज्ञानसारं न गृह्णन्ति किमिति ? एतानपेक्ष्य मद्यताण्डवेन मदमत्ताः वरं इति निशितं विममर्श गणेशः ।

सदा त्वमेवमेव यत्किंचिदभिभाषसे । गत्वा तटाकतीरं समासीनस्तत्र समागतान् जनान् उपदिशन्नास्व । यदा कदाचित्, यस्मिन् कस्मिंश्चिद्वा दिने जनाः सद्बुद्धिं प्राप्य सन्मार्गगामिनोऽवश्यं भवेयुः । इत्याह श्रीदेवी उल्लास-पल्लवित पालित-सप्तलोकी-निर्वाह-कोरकितनेमकटाक्षलीलया ।

तालपत्रग्रन्थजातं, विद्य विनयदं नृणाम् ।
तालवृक्षाच्च मदिरा मदमोहविवर्धिनी ॥

सदसच्चोभयं तालमेकमेवाभयं गतम् ॥
अतो विवेकिनां सर्वं विमृश्य ग्रहणं स्मृतम् ।

वाक्च श्रीश्च समादेया न चेद्वादो मदो भवेत् ।
विवादे च मदे चाऽपि सत्यपुण्ये विनश्यतः ॥

विद्याविनयशीलश्च सत्यसन्धो भवेद्यदि ।
धनधान्यसमृद्धश्च पुण्यात्मा चेद्भवेद्भुवि ॥

मणिकांचनसंयोगः, सुवर्णं च सुगन्धि च ।
एतदेतादृशं वा स्यादादर्शस्थानतां गतम् ॥

श्रीसरस्वतीरहस्योपनिषदन्तर्गता

# सरस्वतीदशश्लोकी

संग्रहीता – नारायणमूर्तिः

आल्लगड्डा.

नीहारहारघनसार सुधाकराभां
कल्याणदां कनकचम्पकदामभूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहरांगीं
वाणीं नमामि मनसा वचसां विभूत्यै ॥

या वेदान्तार्थतत्त्वैकस्वरूपा परमार्थतः ।
नामरूपात्मना व्यक्ता सा मां पातु सरस्वती ॥ ॥ १ ॥

या सांगोपांगवेदेषु चतुर्ष्वेकैव गीयते ।
अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ ॥ २ ॥

या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते ।
अनादिनिधनानन्ता सा मां पातु सरस्वती ॥ ॥ ३ ॥

अध्यात्माधिदैवं च देवानां सम्यगीश्वरी ।
प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥ ॥ ४ ॥

अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति ।
रुद्रादित्यादिरूपस्थ यस्यामावेश्य तां पुनः ।
ध्यायन्ति सर्वरूपैका सा मां पातु सरस्वती ॥ ॥ ५ ॥

या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानानुभूयते ।
व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती ॥ ॥ ६ ॥

नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता ।
निर्विकल्पात्मना व्यक्ता सा मां पातु सरस्वती ॥ ॥ ७ ॥

व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम् ।
सर्वकामदुघा धेनुः सा मां पातु सरस्वती ॥ ॥ ८ ॥

यां विदित्वाखिलं बन्धं निर्मथ्याखिलवर्त्मना ।
योगी याति परं स्थानं सा मां पातु सरस्वती ॥ ॥ ९ ॥

नामरूपात्मकं सर्वं यस्यामावेश्य तां पुनः ।
ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती ॥ ॥ १० ॥

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ ॥ ११ ॥

नमस्ते शारदादेवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥ ॥ १२ ॥

अक्षसूत्रांकुशधरा पाशपुस्तकधारिणी ।
मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥ ॥ १३ ॥

कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता ।
महासरस्वती देवी जिह्वाग्रे संनिविश्यताम् ॥ ॥ १४ ॥

या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा ।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥ ॥ १५ ॥

नमामि यामिनीनाथलेखालंकृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ ॥ १६ ॥

यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति ।
सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं स्तौति सरस्वतीम् ॥ ॥ १७ ॥

तस्यैवं स्तुवतो नित्यं समभ्यर्च्य सरस्वतीम् ।
भक्तिश्रद्धाभियुक्तस्य षण्मासात्प्रत्ययो भवेत् ॥ ॥ १८ ॥

ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा ।
गद्यपद्यात्मिकैः शब्दैरप्रमेयैर्विवक्षितैः ॥ ॥ १९ ॥

अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः ।
इत्येवं निश्चयं विप्राः सा होवाच सरस्वती ॥ ॥ २० ॥

आत्मविद्या मया लब्धा ब्रह्मणैव सनातनी ।
ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः ॥ ॥ २१ ॥

लेखकः – आ. वरदराजन्

( नैयायिकः अर्थैकदृष्टिः, वैयाकरणः शब्दैकदृष्टिः )

वैयाकरणः – नैयायिकाः पशवः ।

नैयायिकः – वैयाकरणाः तृणवः ।

वै – तृणव इति कथम् ?

नै – पशव इति यथम् ।

वै – यथयिति कथम् ?

नै – कथमिति यथम् तथम् ।

वै – "झोन्त" इत्यस्य कोऽर्थः ?

नै – "झोन्त" इत्यस्य झोन्त एवार्थः ।

यद्यझोन्तेऽपि झोन्तः स्यात् घटः किं न पटायते ?

## श्रीवत्सराजव्यासमहोदयेभ्यः श्री ल. म. चक्रदेवस्य लेखः

श्रीमद्भ्यः वत्सराजजी व्यासमहोदयेभ्यः भूतपूर्व "ज्ञानसंघ" अध्यक्षेभ्यः भूयो भूयो नमः ।

मम २९-५-६६ दिनांकांकितं, निर्वाचने भवतां यशसः अभिनन्दनात्मकं पत्रं भवद्भिः प्राप्तमेव भवेत् । "मम मातृभाषा संस्कृतभाषा एव" इति उद्घोषणा भवद्भिः कृता तदर्थं भवतां इदं अभिनन्दनं करोमि ।

यः स्वगृहे कोंकणीभाषां वदति सः यदि कथयेत् "अहं मराठी - मातृ भाषी अस्मि" इति तर्हि तत् विपरीतं वा विलक्षणं वा असत्यम् वा इति न कोपि मन्येत । एतस्मात् कारणात् यत् सर्वे जानन्ति एव" कोंकणी भाषा न स्वतंत्रा-भाषा, अपितु मराठीभाषायाः "उपभाषा" "पोरभाषा" मराठीभाषायाः अपभ्रष्टम् रूपम्" इति । तथा एव सर्वासां भारतीयभाषाणां विषये ।

वास्तवतः वयं सर्वे भारतीयाः संस्कृतमातृभाषिणः एव — दैनंदिन-व्यवहारे काऽपि भाषा स्वगृहे उपयोजिता भवतु, मराठी वा हिंदी वा, काश्मीरी वा, बंगाली, आसामी वा, तमिली वा, तेलुगु वा कानडी वा, मलयालम् वा ।

इमाः सर्वा अपि भाषाः संस्कृतस्य उपभाषाः, संस्कृतात् अपभ्रष्टाः, निःसृताः भाषाः । इदं सत्यं रूपं, इदं सत्या वस्तुस्थितिः भवद्भिः ज्ञाता, तदनुरूपा कृतिरपि भवद्भिः कृता इति कारणात् भवन्तः अभिनन्दनार्हाः । अतः अहं भवतां अभिनन्दनं करोमि ।

संस्कृतमेव अस्माकं राष्ट्रभाषा, सा एव सर्वेषु महत्वपूर्णेषु प्रसंगेषु उपयोजिता भवतु इति यः निर्णयः बेझवाडा इत्यत्र भवतां आध्यक्षे संजाते भारतीय जनसंघस्य वार्षिके अधिवेशने जानेवरी १९६५ तमे वर्षे कृतः तस्य परिपालनं भवद्भिः क्रियते एव इति भूषणावहम् । एकम् — निस्सार्य तद् जनसंघपत्रकं सदस्येभ्यः सर्वेभ्यः परिपालनार्थं प्रेषणीयं इति संप्रार्थये ।

भवद्भिः परिपालितं उपरि निर्दिष्टं तत्त्वं मनसि संधार्य सर्वेपि नवनिर्वाचिताः नियोजिताः वा सदस्याः लोकसभायां, राज्यसभायां, राज्यीय संसदि परिषदि च भवतां अनुकरणं कर्तुं प्रचेदयितव्याः ।

भवतां कृपाकांक्षी,

**श्री ल. म. चक्रदेव.**

मुम्बापुरी.

# संभाषा

लेखकः – वैद्यः, रामस्वरूपशास्त्री.
बालसंस्कृतसम्पादकः- मुम्बापुरी ७७

रामः – किं तव नामधेयम् ?

What is your name please ?

हरिः – हरिः इति नामधेयम् ?

My name is Hari.

रामः – कति वर्षाणि तव वयः ?

How many years old are you ?

हरिः – दश वर्षाणि मम वयः ।

I am ten years old.

रामः – का तव जातिः ?

What is your cast ?

हरिः – अहं ज्ञात्या ब्राह्मणोऽस्मि ।

I am a brabmin by cast.

रामः – अपि त्वं पाठशालां गच्छसि ?

Do you go to School ?

हरिः – आम ! गच्छाम्यहं पाठशालाम् ।

Yes, I go to School.

रामः – कतमं विद्यालयं गच्छसि त्वम् ?

To which School do you go ?

हरिः – अहं भारतीयविद्यालयं गच्छामि ।

I go to Bbaratiya Vidyalaya.

रामः – कतीनां वादनसमये तव विद्यालयः प्रारभते ?

At what time does your School begin ?

हरिः – दशवादनेऽस्माकं विद्यालयः प्रारभते ।

Our School begin at 10 O' clock.

रामः – कस्मिन् वर्गे पठसि त्वम् ?

Which class do you reading ?

हरिः – अहं सप्तमे वर्गे पठामि ।

I read in VII th class.

रामः – तव कक्ष्यायां कति छात्राः सन्ति ?

How many boys are there in your class ?

हरिः – अस्माकं पाठशालायां चत्वारिंशच्छात्राः सन्ति ।

There are forty boys in our class.

रामः – कां जीविकां करोति तव पिता ?

What is your Father ?

हरिः – मम पिताऽध्यापकोऽस्ति ।

My father is a teacher.

रामः – कति भ्रातरः सन्ति तव ?

How many brothers have you ?

हरिः – मम षट् भ्रातरः सन्ति ।

I have six brothers

रामः – क्व निवससि त्वम् ?

Where do you live ?

हरिः – अहं मुम्बापुरीं निवसामि ।

I live in Bombay.

वार्ताभ्यासमिमां छात्रो मासं मासं च यः पठेत् ।
संस्कृतभाषणाभ्यासो कोशाभ्यासी स जायते ॥

# तलऋण (टेर्लिन्) पंचकम्

लेखकः – पिडपर्ति वेंकटरामशास्त्री, M.A., B Ed.,

## प्रार्थनायुग्मम्

तलऋण (टेर्लिन्) नववस्त्रालोलपत्नीसमूहः
परिहृतकमलाया अर्थराश्यातिदुःखी ।
धनपतिऋणलाभाभव संक्षुब्धचेताः
कलियुगनरसेव्यः पातु नो देवदेवः ॥

तलऋण (टेर्लिन्) तलसूत्री (टेलिकाटन्) मुख्यवस्त्रोद्भवत्वात
अतिनिकटभविष्याऽनग्निदग्धत्वभीत्वा ।
नववसनविधानोन्मूलनं प्रार्थयन्ती
हुतवहपृथुकुक्षिः पातु नो भोगभाग्यैः ॥

## प्रतापः

जयतु जयतु टेर्लिन् वस्त्रराजाधिराजः
यदखिलनवराज्ये दीनदीना वसन्ति ।
कृषकजनकुटुम्बा वस्त्रनिर्माणयन्त्राः
रजकजनसमूहाः तन्तुवायादिसङ्घाः ॥

## प्रभावः

इयमतिशयलीला द्रष्टृकान्तांगहेला
धृततलऋणचेला मत्तमातंगलीला ।
युवकहृदयरंगे खेलतीयं हि बाला
रजककुलसतीनां नित्यदारिद्र्यकीला ॥

अनन्तलाभप्रभवस्य तस्य
नग्नत्वसृष्टिः न तु लोप एव ।
शरीरमात्रस्य विवस्त्रणेपि
सृष्टचंतयोरस्य विभूषणत्वात ॥

# धर्मो रक्षति रक्षितः

आसीत्सुधर्मो नाम कश्चित् विप्रः यो देवार्चने सदा निमग्नः आसीत । पार्श्ववर्ती राजा स्वपुत्र्याः विवाहमहोत्सवं कर्तुमैच्छत । शुभवार्तामेनां श्रुत्वाऽनेन सह ग्रामीणास्सर्वेऽपि मिलित्वा जिगमिषवः, बुभुक्षार्ताः प्रस्थिताः राजनगरं, मन्वानाः यत्किञ्चिद्धस्ते पतेदिति । सुधर्मो मध्येमार्गं जीर्णमाञ्जनेयालयं दृष्ट्वा संस्कारामात्रादस्य देवस्य स्नात्वा पूजादीन् कर्तुमैच्छत । ग्रामीणास्सर्वेऽपि बहुकालपर्यन्तमस्यागमनं निरीक्ष्यमाणाः गत्यन्तरं विना (सर्वेऽपि) विहायैनं राजभवनं जग्मुः । सुधर्मस्तावत् पूजादीन् कर्तुमारेभे । ग्रामीणाः राजभवनं गत्वा तत्र षड्रसोपेतमिष्टान्नमभक्षन् । विप्रोप्यत्र क्रमक्रमेण वायुसूनुं सम्यगर्चयित्वा एकान्तप्रदेशे तत्रैवावसत् । यामिनी सञ्जाता । सर्वोपि प्रदेशः अन्धकारभरित आसीत् ।

अकस्माद्दिष्ट्या स विप्रः विहायसा उड्डीय राजभवने राजभूषणैरलंकृतः स्थानं प्राप्तवान् । विप्रो युवराजः सञ्जातः । सोऽपि राजकुमारः विवाहवरो-पीत्थमेवामानुषशक्त्या आंजनेयस्वाम्यालयमागतः । विवाहमुहूर्तः सम्प्राप्तः । विवाह-महोत्सवः वैभवेन प्राचलत । सूत्रबन्धनादिरग्निसाक्षिकं समाप्तम् । पुनरांजनेय-प्रभावेन द्वावपि तयोस्थाने प्राप्तवन्तौ । राजकुमारोप्याश्चर्यचकितः मया न बद्ध-मेतत्सूत्रमित्युपरिकार्याणि कर्तुं नाङ्गीचकार । राजकुमारी स्पष्टमकथयत नाहं इम परिणीतवती, परन्तु सोऽन्य एवेति । राजकुमारः स्वोक्तिं द्रढयितु गतरात्र्याः सम्पूर्णां कथामकथयत । तदा सर्वेऽपि साश्चर्यमनेन सह आंजनेयालयं गत्वा तत्र स्थितः वैदिकब्राह्मण एवास्य कन्यायाः भर्तेति ज्ञात्वा तं ब्राह्मणं राजभूषणैरलंकृत्य निर्विघ्नं तदुपरिकर्माणि कुर्वन् । ग्रामीणाः राजकुमार-स्थानं प्राप्तं ब्राह्मणं दृष्ट्वा परस्परं साश्चर्यमदर्शयत । तदनन्तरं ज्ञानवन्तस्ते अब्रुवन् "अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र" । यदि वयं धर्मं रक्षामः धर्मोप्यस्मान् रक्षिष्यति इति ।

# सुलभपाठमाला २७

## गृहम् - २

अहं चित्तूरनगरे वसामि । तत्र मम गृहं प्रधानवीथ्यां वर्तते । मम गृहे सिंहद्वारं एकं वीथ्यभिमुखतया वर्तते । बहिर्द्वारं च [1]संकटिका मुखतया वर्तते । गृहस्य अन्तः द्वादशद्वाराणि सन्ति । [2]महानसस्य, पूजागृहस्य, भोजनशालायाः, कार्यालयस्य [3]स्नानापवरकस्य, [4]पायुस्थानस्य, अंतरंगणस्य, पृथक्पृथक् द्वाराणि सन्ति । अन्तरंगणे चत्वारः स्तम्भाः वर्तन्ते । तस्य एकस्मिन् पार्श्वे सौधारोहणार्थं सोपानावलिर्वर्तते । तत्र तत्र तेजसो वायोश्च प्रसरणार्थं षोडशवातायनानि निवेशितानि । द्वाराणां वातायनानां च कवाटानि सुघटितानि । सिंहद्वारादन्यत्र युगळकवाटानि सन्ति, सिंहद्वारे तु एकं । द्वारकवाटानां सर्वेषां अर्गलाः वर्तन्ते तत्र केषांचित शृङ्खला अपि लंबन्ते । कुड्येषु तत्र तत्र [5]आलिमेलाः निखाताः यत्र उत्तमं वस्तुजातं निधाय संरक्ष्यते । आलिमेलाकवाटेषु [6]पारदर्शकाः दर्पणाः स्यूता वर्तन्ते । येन अन्तर्निहितानि सकलानि वस्तूनि बहिः सुस्पष्टं दृश्यन्ते । एकत्र तु बिंबग्राही दर्पणो वर्तते यत्र वयं आत्मानं प्रतिवीक्ष्य मुखकेशवस्त्रसंस्कारादिकं निर्वर्तयेम । महानससमीपे कश्चन कूपो वर्तते । तस्य जलं [7]चक्रिकारज्जुधृतया कुम्भ्या उद्धृत्य कुण्डं आपूर्यते येन स्नानादिक कार्यं निरूह्यते । महानसे च काचन [8]नाळिकापि विद्यते यतः पानीयं आह्रियते । अस्मद्गृहे विद्युद्दीपाः बहवस्सन्ति । तेषु [9]कूप्यः [10]षष्टिवाहः शतवाहश्च देदीप्यन्ते । अस्मद्गेहे तिस्रः [11]पावनिकाश्च वर्तन्ते । तत्रैका छदिनिबद्धा कुलालचक्रवत् भ्रमति, अन्या पीठबद्धा रथचक्रवद्भ्रमति । अपरा च आसारप्रसाराभ्यां चक्रवद्भ्रमन्ती परितो वीजयति । अस्मद्गेहे [12]री(ली)ढयोगोपि वर्तते । सः दिवानिशं वार्ताः कथानिकाः नाटिकाः संगीतं चास्मान् श्रावयति ।

---

1. लेन् 2. पाकशाला 3. रूम् 4. लैट्रिन् 5. अल्मेरा 6 पृष्ठनस्थितदर्शकः 7. चक्रिका – पुली 8. वाटरपैपू 9. बल्बस् 10 वाट्स् 11 फ्रान् 12. रेडियो ।

## चित्तूरनगरे चण्डीहोमः श्रीरामपट्टाभिषेकश्च

परमहंसपरिव्राजकाचार्याणां श्री कूडलि शृंगेरी महापीठाधिपतीनां श्री सच्चिदानन्दभारतीस्वामिनां पंचाशत्तमवर्धन्त्युत्सवः चण्डीहोमः श्रीरामपट्टाभिषेकमहोत्सवश्च आगस्ट 21, 23, 24 तारिकासु यथाक्रमं महता वैभवेन सम्पन्नाः । अन्ते श्रीकूडलि शृङ्गेरि महासंस्थानचरित्रं आंध्रभाषामयं प्रकाशतां नीतं यत्र कूडलिमठप्रारंभसमयात अद्ययावत् तत्पीठाधिष्ठातॄणां आचार्याणां चरित्रादिकं सप्रमाणं विशदीकृतम् ।

## तिरुपतिपुरे आर्षसदः

श्री कांचीकामकोटिपीठाधिपतीनां श्रीशंकराचार्यस्वामिनां आध्यक्ष्येण तिरुपतिपुरे ब्रह्मोत्सवसन्दर्भे आर्षसदोनाम्ना सभावेशस्समजनिषत । वेद वेदांगपारंगताः पौराणिकाः कथकाः उपन्यासकाश्च बहवः तत्र सम्मिल्य स्वस्ववैदुष्य प्रादर्श्य स्वस्वयोग्यतानुगुणं सम्मानिताः ।

## सिंहले संस्कृतोन्नतिः

श्रीलंकायां आयुर्वेदाध्यापनं संस्कृतेनैव भवति, क्वचित् आंग्लानुवादसहायेन क्वचिच्चसिंहलभाषायामपि । अनेन सिंहलीयानां संस्कृते आयुर्वेदे च कियती निष्ठेति अस्माभिर्ज्ञातुं शक्यते । भारतीयाः कथं न लज्जन्ते आत्मकृते संस्कृतोपेक्षणविषये ? इति लिखति स्वामी-ब्रह्मानन्दतीर्थः मण्डलेश्वरात् ।

## सायंवर्णनम्

### पैत्तंबाडि महाकविः० व० रामानुजाचार्यः

आदित्योऽपि दिवाकरोऽपि च जगच्चक्षुर्विटाग्रचो यथा
ऽऽकर्षन्नात्मकरान्महीतलगतानंभोजिनीवल्लभः ।
रागी सन्नरुणारुणांबरलसद्भागं स्वयं संस्पृशन्
वारुण्यस्तगिरिस्तनस्थितकरो रात्र्या मुखं चुम्बति ॥

मध्याह्नतापमलिनानि कळेबराणि सम्यग्विशोध्य सलिलैर्हि कृषीवलाद्याः ।
स्कन्धोत्तमांगकरसंधृतलांगलाद्यास्सायं स्वगेहमुपयान्ति सुविश्रमार्थम् ॥

वरुणालयकाष्ठायामरुणेऽप्यरुणे पत्र्याद्याः ।
स्वकुलायवृक्षशाखास्सत्वरमेवोपयान्ति निद्रार्थम् ॥

ताराश्च द्विजराट् कलानिधिरपि प्रीत्यौषधाः प्राणयन्
प्राचीदिक्कुचशैलगांबरकरोरागी हिमानीकरः ।
भोक्तुं शीतकरैर्निशांव्यवसितो ह्यालिंग्य गाढं शनै-
स्तत्स्पष्टाधरभागविस्तृतकरस्तस्या मुख चुम्बति ॥

निशाटना राक्षसपक्षिवर्गास्तिरोहितेऽर्के प्रतिबुध्य सायम् ।
स्ववैरिबृन्दस्य गतास्समीपं हिंसां करोतुं प्रयतन्त एत्य ॥

त्वय्यागतायां हि तमोवृतायां रात्रेऽखिलानामतिभीतिदायाम् ।
सर्वे जनास्ते वदने मुदाऽलंकुर्वन्ति दीपैर्निजदेवगेहान् ॥

अरुणेऽरुणेऽर्घ्यकरणे कृतत्वरा वरुणस्य दिश्यपि जलाञ्जलित्रयम् ।
विरचय्य वेदजननीजपं द्विजा अवलोकयान्ति खमुपस्थितेरुडु ॥

इति सरसकविराजकविरत्नबिरुदाद्यतिमहितरघुनाथसहजाभियेन ।
अतिसरळमृतुकल्यमुखवर्णनमिदं यतिनृपतिहृदयेन रचितं बुधेन ॥

# अष्टोत्तरशतदिव्यदेशस्तुतिः

## श्री कांची प्र. भ. अण्णङ्गराचार्यस्वामिकृता

( सटिप्पणीका )

( पूर्वानुबन्धः )

### ४. तिरुप्पुलिंगुडि दिव्यदेशः

पुळिंगुडिसमाह्वये महितदिव्यदेशेऽनघे
फणीन्द्रशयनोज्वलं शठरिपोर्मुनेर्मानसे ।
वसन्तमनिशं च तत्स्तुतिततिप्रहृष्टं हरिं
भजे चरणपङ्कजद्वितयनित्यसेवोत्सुकः ॥

### ५. तेन् तिरुप्पेरैदिव्यदेशः

तेन्तिरुप्पेरयिल् दिव्यनामांचिते
श्रीशठद्विण्मुनिस्तोत्रपात्रे शुभे ।
दिव्यदेशे लसन् कर्णभूषोज्वलः
श्रीपतिर्भूपतिस्सेव्यतां स्तूयताम् ॥

### ६ तिरुक्कोळूरु दिव्यदेशः

मधुकरकविजननभूमिं शठरिपुमुनिजुष्टमहिपतौ शयितम् ।
निक्षिप्तनिधिसमाख्यं कोळूरुक्षेत्रनाथमुपसेवे ॥

### ७ तुलविलिमंगलदिव्यदेशः

तुलविलिमंगलाख्ये यमलक्षेत्रे शठारिमुनिगीते ।
अरविन्दलोचनेशं देवाधीशं च नौमि भगवन्तौ ॥

८, पेरुंकुळ (बृहत्तटाक) दिव्यदेशः

बृहत्तटाकसंज्ञया विभूषिते विलक्षणे
शठारियोगिकीर्तिते शुभस्थले चकासतम् ।
विचित्रनर्तनाह्वयं रमासखं क्षमानिधिं हृदा
सदा विचिन्तये विलोकये च कीर्तये ॥

९. श्रीगोष्ठीपुर (तिरुक्कोट्टियूरु) दिव्यदेशः

श्रीभूतयोगिमहदाह्वयभक्तिसार भट्टेशसूरिकलिजिन्मुनिवर्यगीतम् ।
दिव्ये फणीन्द्रशयने शयितं महान्तं गोष्ठीपुरेशमिह नौमि यतीन्द्रजुष्टम् ।

१०. श्रीसत्याद्रि (तिरुमेय्यम्) दिव्यदेशः

परकालसूरिफणितिप्रकीर्तितं भज चित्त ! सत्यगिरिराजनायकम् ।
फणिराजतल्पमधिशय्य भास्वरं मणिराजशोभिवक्षसं हरिम् ॥

११. फुल्लारण्य (तिरुप्पुल्लाणि दिव्यदेशः

फुल्लारण्यक्षेत्रमतीह प्रथमाने पुल्लाणीति श्रीकलिविद्विण्मुनिगीते ।
दिव्येदेशे पायसभुक्तिप्रवणं त्वां ध्यायं ध्यायं हृष्यति नित्यं मम चित्तम् ।

१२. श्रीमन्महावनगिरि (तिरुमालिरुञ्जोलै) दिव्यदेशः

शठरिपुभूतयोगिकलिजिन्मुनि भट्टमुनिप्रियतनयास्तुतिप्रथितवैभववारिनिधिम् ।
हरिमिह सुन्दरोरुभुजमिन्द्रमणिप्रतिमं वनगिरिमावसन्तमुपयामि विभुं शरणं ॥

१३. मोहनक्षेत्र (तिरुमोहूरु) दिव्यदेशः

शठवैरिसूरिपरकालसूरिवागुपगीतकीर्तिमनिशं प्रकीर्तये ।
इह मोहनाख्यनगरे चकासतं रमणीयदिव्यशुभविग्रहं हरिम् ॥

( सशेषम् )

# पद्यरत्नानि

लेखकः – वैद्यः, रामस्वरूपशास्त्री.
बालसंस्कृतसम्पादकः- मुम्बापुरी ७७

स्वकीयं मन्यते सर्वं धनं धान्यं कुटुम्बकम् ।
कालस्य भोजनं विश्वमिति मूर्खो न वेत्ति सः ॥

न धर्मे मानसं यस्य यो धनाय प्रधावते ।
न धर्मो न धनं तस्य हन्त गेहे न घटके ॥

बालिशाः भूरि जल्पन्ति न कुर्वन्ति मनागपि ।
कार्येषु लभते सिद्धिं यः करोत्यविकत्थनः ॥

सङ्गतं साधुभिः सार्धमन्यव्याधिविनाशनम् ।
तदेवाऽसाधुभिः सार्धं दिवारात्रमुपाधिकृत् ॥

पानीये बुद्बुदाकाराः देहाः देहभृतामिह ।
जायन्ते च विलीयन्ते दोषाणां सन्निपाततः ॥

आगतं मालिकं वीक्ष्य कलिकाभिरोदवितम् ।
पुष्पाणामद्यवारोऽस्ति श्वोऽस्माकं च भविष्यति ॥

सर्वः स्मरति गोविन्दमागतासु विपत्तिषु ।
सुखेषु भजमानानां भक्तानां सन्ति सिद्धयः ॥

*B. L. Pathak*
DALPAT STREET,
MATHURA (U.P.)

We are intending to publish a critical study of the prose in Sanskrit literature from 1901 to 1966. Hence, weare in need of Sanskrit dramas, stories, novels, essays, criticism, autobiographies and biographies. Apart this we would not be less pleased if you sendus the Radio plays, journals and periodicals that may solve our purpose said above.

We shall be highly obliged if you make your work available. Your lifesketch is of no less importance and we ask you send it kindly.

With thanks,

Dated

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः। तेषां शुभनामानि दीयन्ते। अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम्। ति. कं. ति.

## Names of Subscribers for Gairvani 1966·

| | | | |
|---|---|---|---|
| 93. | Head master, M· R· M. P. School, Vijayanagaram· | 4 | 00 |
| 94. | Madhavachitanya Brahmachari, Varanasi | 4 | 00 |
| 95. | P. Subbavadhani, Chittoor | 4 | 00 |
| 96. | V. S· Chalapathi, Voolepalle | 8 | 00 |
| 97. | K. G. Narayana, Tirupati | 4 | 00 |
| 98. | G· N ara ana Sarma, Cuddaph | 4 | 00 |

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R.C.No. 27-A 3/65 Date 14—7—65.

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिका:

रचयिता – श्री शे. रङ्गनाथशर्मा, केयमुत्तूरु.

नाद्यादन्नं पिबेत्तैलं, शीघ्रं गच्छेच्चतुष्पदैः ।
न मृगो न नरश्चापि, यो जानाति स पण्डितः ॥

[बाष्पशकटम्]

न पक्षी, विहगश्चैव, द्रुतगामी न मारुतः ।
न घनो घनवाही च, न मुखी, मुखरः स कः ?

[ विमानः ]

अब्धौ शेते, सदा कुक्षौ बिभर्त्येव चराचरम् ।
सेव्यते च श्रिया शश्वन्न विष्णुः, किं भवेदिदम् ? ॥

[नौः]

अयोमुखी दीर्घकाया बहुपादा जनाशना ।
अस्पृष्ट्वा भूतलं याति यक्षिणी देवता च न ॥

[धूमशकटम्]

पूर्वापरे पदे कृत्वा परिवर्ती भुवस्तले ।
पादाहतो द्रुतं याति वायुभक्षः सखे ! स कः ? ॥

[द्विचक्री]

Published by Sri N. Ramanatha Iyer, B. A., B. L, Advocate & Secretary, S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri T. K. Thiruvengadacharya, at Vijaya Press, Chittoor, (A. P.) C. 1500.